Tel: "Samskrutam"      दूरध्वनिः - "संस्कृतम्"

वाणीं भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका

संपुटः १३ | 15th OCTOBER | क्रमांकः १०

राक्षस आश्वयुजाङ्कः | शकाब्दाः १८९७ | मूल्यम् ०-५० पैसाः

# विषयसूचिका

# षण्मुखस्तुतिः

राग: – भाग्यश्री
ताल: – आदि

सङ्गीतभूषणम् – ति. गो. अनन्तसुब्रह्मण्यम्

पल्लवि

षड्गिरिवास षण्मुख
सप्तगिरीशभागिनेय ॥ षड्गिरि ॥

अनुपल्लवि

अष्टमूर्तियुतशिवकुमार
नवशक्त्यात्मकगिरिजातनय ॥ षड्गिरि ॥

चरणम्

दशावतारमहितप्रताप
एकादशरुद्रसन्नुतपाद
द्वादशादित्यसन्निभदेह
त्रयोदशमंगलभाग्यश्रीदायक ॥ षड्गिरि ॥

# अत्ययः कस्य वा जातः ?

अत्ययशब्दस्य अतिक्रमः, भीतिः, इति च, अर्थद्वयं वर्तते । अत्रतु प्रकरणानुसारेण द्वैतीयीको अर्थो विवक्षितः । अत्ययः देशस्य, उत प्रजानां — वेत्यपि, आहोस्वित् उभयस्य इत्यपि चर्च-नीय एव । "गङ्गायां घोषः" इतिवत् लक्षणया प्रजाना मित्येव सुवचम् । कैःचित् देशीयैः विदेशीयैः च मिलित्वा, व्यस्त-तया च प्रभुत्वस्य कुंठितत्वं, आपादयितुं महान् प्रयत्नः कृत इति तद्विपत्तेः देशस्य रक्षणाय मान्यया प्रधानसचिवया इन्दिरा-गान्ध्या परिस्थितिरियं परि-कल्पितेति सर्वै र्ज्ञायत एव । आशेतुहिमाचलं सर्वे जनाः स्वीयां सम्मतिं च बहुधा प्रकटी-चक्रुः । वैदेशिकाः केचन एत न्नयुक्त मिति विमर्शितवन्तः । किन्तु तेषां आक्षेपाणां न केवल मस्माकं नायकैः किं च श्रीमत्या प्रधानसचिवया समीचीनं प्रत्यु-त्तरं भणितं । तेतु वैदेशिकाः आत्ययिकपरिस्थित्यां भारते प्रजाप्रभुत्वस्य हानि र्जायत इति भ्रान्ति प्राप्नुवन्ति ।

अस्याः परिस्थितेः प्रभावः साधु यावद्भारतं व्याप्य सर्वासु जनेषु व्यापारिषु उन्नताधि-कारिषु किं वा वक्तव्यं सर्व-स्मिन् जने कालुष्यं प्रक्षाळ्च नूतनोत्साहं, नीतिं शान्ति स्वार्थ-राहित्यं च दिनदिनाभिवृद्धि नयति इति कथने न काप्यति-शयः ।

पञ्चाशदधिक वर्षवयस्केषु, पञ्चविंशतिवर्षेभ्यः अनन्तरं उद्योगं कुर्वत्सु ये ये अलसाः अशक्ताः अविनीतिमन्तः वर्तन्ते, तेषां उद्योगतः बहिःप्रापणमपि देशस्य अभ्युन्नतये, तत् तत् शाखासु कार्यजातं शीघ्रगत्या

निर्वोढुं चैव प्रभुतया क्रियमाणा, समीचीना, सरणिरेव भवति। अनेन तादृशाना मुद्योगिनां विषये प्रभुत्वं कक्षां प्रदर्शयति अवमतिं च करोतीति केनापि कदापि न मन्तव्यम्। तत्वे विचार्यमाणे सति, ये ये अशक्ताः ते विश्रान्ति मनुभवितुं एव योग्या भवन्ति। अनेन स्वेषां न केवलं अपितु देशस्यापि आरोग्याभिवृद्धिः जायते। एषा स्थितिः सर्वैरप्यभिलषणीया ननु?

आन्ध्रप्रदेशे मन्त्रिणः प्रधान सचिवायाः द्विदशसूत्राणां व्याप्तये बहुधा श्रद्धां प्रदर्शयन्ति। इतरराष्ट्रीयाः मन्त्रिणः अपि प्रधानसचिवायां विश्वासं प्रकटय्य द्विदशसूत्राणां आचरणे बद्धकक्षा एव। आन्ध्रप्रदेश विद्यामन्त्री विशिष्य विद्याशाखां अच्छतरां कर्तुं बहुधा यतत इति महान् प्रमोदः।

उपाध्यायाः विना श्रमं कालं यापयन्तीति, विद्यार्थिनस्तु, पठनादिकं दूरतो निरस्य येन केनाप्युपायेन परीक्षासु उत्तीर्णता मेव साधयितु मिच्छन्तीति, तत्र तत्र सभासु विद्यामन्त्री बहुधा उद्घोषते। विद्याशाखायाः सम्यक् परिशीलनेन विद्यामन्त्रिणः समुत्पन्नः अभिप्रायः न युक्त इति को वा वक्तुं समर्थः।

आत्ययिकी स्थितिस्तु वस्तुतः नाभिलषणीयैव। तन्निष्कासनयोग्या दशा यदा जायेत तदानिरस्येत।

'अत्यये प्रत्ययो जातः पूतसंस्कारकारणात्।
अत्ययस्याऽत्ययो भूयात् यदा सर्वे पवित्रताः॥

जयतु भारतं — जयतु नीतिः।

# गान्धीकथा

बालगणपतिभट्टः, श्रीरङ्गपत्तनम् ।

जातस्य हि ध्रुवो मृत्युः । कस्यापि मरणादवश्यंभाव्या द्भीति र्न सर्वथा साध्वी । अपरिहार्ये तस्मिन्नर्थे दुःखमपि नोचितम् । दुःखाश्रुभि र्मृतानामपि पीडैव भवति यतः "श्लेष्माश्रु बन्धुभि र्भुक्तं प्रेतो भुंक्ते यतोऽवशः" इति वचनाधारेण ।

महात्मा गान्धीमहोदयः मरणमपि "भगवतो दयाविशेषं" इत्येव सम्भावयति स्म । यदा कदा वा दीर्घोपवासकाले देहत्यागभये आशंकिते एवमेवात्मनोमतं प्रकटयति स्म स महात्मा ।

प्रायः १९१६–१७, क्रीस्तवीय संवत्सरस्येयं कथा । बिहारप्रान्तीयचम्पारणग्रामे कृषीवलानां महदान्दोलनस्य वेला । आरामस्वामिना मांग्लेयानां महानत्याचारः कृषिकान् प्रति सर्वकारीयावलम्बनबलात् यथावत् प्रचलति स्म । तस्मिन्नेव समये सारक्षकभटै र्जातु कृते दण्डप्रहारे भीकरे कश्चन युवा शीर्षाघातेनोपरतः ।

तस्य माता स्थविरा एका । गृहकार्यसंवहनाय तं विना न कोप्यन्य आसी त्तस्याः । यदा सा तनुजस्य दुःखदां मृत्युवार्तां श्रुता तदा महात्मनो गान्धिनः निकट मुपगम्य प्रार्थयामास । "महात्मन्! ममैकं एव पुत्रं निर्दयो शमनः न्यगिलत् कृपया भवान् वा तं प्रत्यानयतु" इति ।

श्रुत्वापि दीनवचनं दयावान् गान्धीमहोदयः किं वा कर्तुं प्रभवेत्? गंभीरवाण्या प्रत्यवदत् वृद्धायाः उत्तमांगे हस्तं निधाय स्वय मश्रूणि विमुञ्चन्।

"मातः! मृतं पुत्रं ते कथं वा दातु महं समर्थः? मयि नास्त्येवैतादृशी शक्तिः, आहोस्विन्माहात्म्यम्। किन्तु तनुज मन्यं ते कथमपि आनीय त्वां सांत्वयामि" इति।

तस्याः वदनं किञ्चित् प्रफुल्लित मभूत्। तदा महात्मा गांधीमहोदयोऽब्रवीत्।

"जननि! न तव पुत्रः मृतः। मरणमात्तस्तु "गांधी" एव। अत्र ते सम्मुख एव तु वर्तमानोयं तव पुत्रः" इति। तस्याः आशीर्वचनापेक्षया स्वशिरो नमित्वा तूष्णीं तस्थौ च।

सहसा प्रवाहितदुःखोद्वेगेन महात्मानं परिरभ्य "शतायु र्भव" इति निरुद्धबाष्पकण्ठा सा स्थविराऽवदत्।

---

## प्रणय - पीयूषम्

रचयिता – इन्द्रमोहनसिंहः

श्रृणु मम हृदि तवैवच्छबिः।
गगने ताराश्चन्द्रो रविः॥
त्व ममरगीतिकाहं गायकः।
त्वं सौन्दर्यं मह माराधकः।
त्वमसि कविताहमस्मि कविः॥

अहं कोकनदं त्वं लालिमा
अहमाकाशः त्वमसि नीलिमा
त्वं मखदेवताहं हविः॥

# अयःकायः

पुन्नमराजु वेंकटरमणमूर्तिः
संस्कृतोपन्यासकः, प्रभुत्वकलाशाला, चित्तूरु

१. नायका बहव स्सन्ति राजानोऽपि सहस्रशः ।
ईदृशो नायको लोके न भूतो न भविष्यति ॥

२. अयःकाय इति ख्यात स्सर्दारुबिरुदाङ्कितः ।
आचन्द्रार्कं पटेलोऽयं यशःकायेन राजते ॥

३. कुशाग्रधीमान् धृतिमान् सुरूपी,
सुशिक्षितो न्यायविचारणेषु ।
संसेव्य गांधिं सकलेषु कार्ये
ष्ववाप कीर्तिं द्विगुणीकृतां च ॥

४. गतकायोऽप्यसौ वीरो रेजे ज्योति रिव स्थितः ।
सदा संस्मरणीयो हि स यूना मद्य भारते ॥

# उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः

## तपःप्रभावात् राजर्षिः ब्रह्मर्षि रभवत्

बोधकरत्नं, रामायणज्योतिः, उपन्यासचक्रवर्ती
ज्यौतिषविद्वान् – मु. वि. श्रीनिवासराघवाचार्यः, अवलूर्

### ( विश्वामित्रकथा )

पुरा कृतयुगे कुशनाम्नः राजर्षेः धर्मपत्न्याः वैदर्भ्याः चत्वारः पुत्राः प्रादुरासन्। तेषां नामधेयानि "कुशाम्बः, कुशनाभः, आधूर्तरजाः, वसुः" इति। कुशाम्बो राजा कौशाम्बीं इति नगरं निर्माय तस्मिन् राज्यशासनं अकरोत्। कुशनाभः महोदयमिति पुरं उत्पाद्य तस्मिन् प्रजाः पर्यपालयत्। आधूर्तरजसः राज्ञः राज्यस्य नाम धर्मारण्यमित्यासीत्। सः तं राज्यं सम्यक् शशास। राजा वसुस्तु गिरिव्रजाख्यं नगरं पालयति स्म।

तेषु कुशनाभस्य पुत्रः गाधिः इत्यासीत्। राज्ञः गाधेः पुत्रः विश्वामित्रः। तस्य तु कुशवंशजातकारणेन कौशिक इत्यपरं नाम। असौ विश्वामित्रः क्षत्रियशास्त्रानुसारं स्वपित्रा जननमारभ्य ब्रह्मचर्यव्रतग्रहणपर्यन्तं तत्तत्काले जातकर्म - नामकरण - अन्नप्राशन - चौल - उपनयन कर्मभिः संस्कृतः, सांगान् वेदान् अधीत्य, धनुर्वेदे च कोविदः, सर्वशास्त्रप्रवीणश्चासीत्। सकाले यौवने कांचित् राजकन्यां परिणीय गृहस्थाश्रम - राज्यधर्माचरणं च सम्यक् आचरितवान्। बहवः पुत्राश्चाभवन् तस्य राज्ञः विश्वामित्रस्य। प्रजाः स्वप्रजा इव मन्वानाः तेषां हितकारी उपर्युपरि हितचिन्तकश्च राज्यं बहुवर्षसहस्राणि अकरोत्।

अथ कदाचित् महातेजाः राजा विश्वामित्रः वरूथिनीं योजयित्वा अक्षौहिणीपरिवृतः मेदिनीं परिचक्राम। बहूनि

राष्ट्राणि नगराणि गिरीन् सरितश्च क्रमशः विचरन् आश्रमान् आजगाम। अन्ततः नानावृक्षलताकुलं नानामृगगणाकीर्णं प्रशान्त-हरिणीभिः परिवृतं देव-दानव-गन्धर्व-किन्नरै रुपशोभितं, राजर्षि-ब्रह्मर्षि - देवर्षिगणसेवितं, द्विजसंघनिषेवितं, जपहोमपरायणैः अब्वायुभक्षैः जितरोषैः जितेन्द्रियैः तपश्चरणसंसिद्धैः अग्निकल्पैः ब्रह्मकल्पैः महात्मभिः सततं संकुलं अन्यैः वैखानसैः वालखिल्यैश्च समन्तात् उपशोभितं अपरं ब्रह्मलोकमिव विराजमानं वसिष्ठ-स्याश्रमपदं महाबलः विश्वामित्रः ददर्श।

दृष्ट्वा सः दूरत एव स्वपरिजनं ससैनिकं स्थापयित्वा एकाकी वसिष्ठाश्रमं प्रविश्य जपतां वरं वसिष्ठं विधिना ननाम। महातेजाः वसिष्ठस्तु प्रणमन्तं राजानं कौशिकं विश्वामित्रं "राजन् तव स्वागतं" इत्युक्त्वा आसनमेकं निर्दिश्य उपविशतु इति आदिदेश। ततः उपविष्टाय धीमते विश्वामित्राय मुनिवरः वसिष्ठः यथान्याय्यं फलमूलान्युपाहृत्य राज्ञः प्रजानां कुशलं पप्रच्छ। राजसत्तमः विश्वामित्रोपि तां पूजां वसिष्ठात् प्रतिगृह्य तेषां तपोग्निहोत्रशिष्येषु कुशलं पर्यपृच्छत्। वसिष्ठोपि राज-सत्तमं सर्वत्र कुशलं प्राह। परस्परकुशलप्रश्नोत्तरसमापनान्ते वसिष्ठः प्रहसन् विश्वामित्रं इदं उवाच। हे महाबल, अस्य तव सपरिवारस्य बलस्य आतिथ्यं कर्तु मिच्छामि यथार्हं संप्रतीच्छ मे। राजा त्वम्, अतिथिश्रेष्ठः पूजनीयः प्रयत्नतः इति। वसिष्ठेनैवं उक्तः महामतिः विश्वामित्रः वसिष्ठं इत्थं अब्रवीत्। — पूजावाक्येन पाद्येन आचमनीयेन भगवद्दर्शनेन फलमूलप्रदानेन आतिथ्यं सम्यक् कृतमेव। महाप्राज्ञेन भवता सर्वथा पूजार्हेण सुपूजितः। अनेन अलं। नमस्तेस्तु गमिष्यमि। आमन्त्रये इदानीं। क्षेमाय पुनरागमनाय च। मैत्रेण चक्षुषा ईक्षस्व इति।

[ अनुवर्तते ]

# चतसृणां मूर्तीनां चत्वारो धर्माः

ज. शेषाद्रि अय्यंगार्यः,
न्यायाध्यापकः, S. V. प्राच्यकलाशाला, तिरुपति ।

[ पूर्वानुबन्धः ]

श्रीरामो भ्रातृवत्सलः । सः शैशवे लक्ष्मणेन वियुक्तश्चेत् आहारनिद्रादिकमपि न सिषेवे । "न च तेन विना निद्रां लभते पुरुषोत्तमः । मृष्टमन्नमुपानीतं नैवचाश्नाति तं विना" इति मुनिः शैशवं वर्णयति ।

सुकुमारोऽपि वन्यानां क्लेशानां अनुचितोऽपि राजपुत्रोऽपि रामः कण्टकाकीर्णे वने मुनिवेषधृक् सभार्यः सलक्ष्मणश्च वसन् स्वक्लेशं अविचिन्तयन् नन्दिग्रामे राज्यधुरं वहन्तं भरतं स्मृत्वा "अत्यन्तसुखसंवृद्धः सुकुमारः सुखोचितः । कथं नु अपररात्रेषु सरयूमवगाहते" इति शोचति । अहो तस्य भरते वात्सल्यम् । लोके भ्रातरि असूयालुः तदीयं गुणं मित्रसमीपे नैव श्लाघते । श्रीरामस्तु सुग्रीवसविधे भरतसौहार्दं "न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः" इति प्रशंसति । ततोऽपि भरते रामस्य प्रीतिः व्यज्यते ।

तस्य लक्ष्मणेऽपि निरतिशया प्रीतिः । युद्धे शत्रुशरपीडितं निष्प्रज्ञं लक्ष्मणमुद्वीक्ष्य रामः साश्रुगद्गदं बहुविलपन् "देशे देशे कलत्राणि देशे देशे च बान्धवाः । तं तु देशं न पश्यामि यत्र भ्राता सहोदरः" इति भ्रातुः सुदुर्लभतां प्रकटीकरोति । वस्तुतः

भिन्नोदरमपि सौमित्रिं "सहोदरः" इति वदन् रामः तस्मिन् स्वस्य अतिशयितं वात्सल्यं व्यन्जयति ।

पितृवाक्यपरिपालनं पितुः यशसः संरक्षणं च श्रीरामस्य प्रमुखं उद्देश्यम् । "जीवतो वाक्यकरणात् प्रत्यब्दं भूरि भोजनात् । गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता ।" इति प्राचां वचः । स्वसुखमपि अविगणय्य जीवतः पितु र्वचनपरिपालनं तनयस्य प्रथमो धर्मः । कैकेयीवचनचोदितस्य पितुराज्ञां शिरसिकृत्य रामः चतुर्दशवर्षाणि वनवासक्लेशमन्वभूत् । "धर्मोपदेशात्त्यजतश्च राज्यं माञ्चाप्यरण्यं नयतः पदातिम् । नाऽसीद्व्यथा" इति सीताप्याह । राज्यपरित्यागे चित्तवैकल्यं नाऽभूत् । संतुष्टः एव सः वनं अगमत् । कविकुलगुरुः कालिदासः "पित्रा दत्तां रुदन् रामः प्राङ्महीं प्रत्यपद्यत । पश्चाद्वनाय गच्छेति तदाज्ञां मुदितोऽग्रहीत्" इत्याह । परम्परागतदायभूतैश्वर्यापेक्षया रामस्य पितृवचनपरिपालने अभिनिवेशाधिक्यं व्यज्यते ।

गतश्रीको दरिद्रोऽपि रामः पितुः कालधर्मगतिं श्रुत्वा आरण्यकाशनेन इंगुदीपिण्याकेन मन्दाकिनीजलाञ्जलिना च पितृकृत्यं निर्वर्तयति स्म । चित्रकूटे सचिवैः सार्धं शिरसाप्रणम्य भरते "राज्यभारं स्वीकुरुष्वेति" रामं याचमाने सति "राज्यहेतोः कथं पापं आचरेन्मद्विधो जनः ।" इति राज्यस्वीकारः पितुः शासनलङ्घनमित्यधर्मः, अरण्यगमनमेव पित्रादिष्टो धर्मः मदनुष्ठेयः" इति बोधयन् भरतं समाश्वासयत् ।

लक्ष्मणस्य त्ववतारः ज्येष्ठे कनिष्ठेन भक्तिः कार्या, भक्तस्य भगवत्कैङ्कर्यमेव कर्तव्यं, इति प्रदर्शनार्थः । लक्ष्मीवान् खलु लक्ष्मणः । चीरजटाधरः खनित्रपिटकाधरश्च रामानुचरो

लक्ष्मणः लोकप्रसिद्धां कां श्रियमुद्वहति। कैङ्कर्यरूपा श्रीरेव किल तं शोभयति। श्रीरामस्यात्यन्तपरतन्त्रो दासः लक्ष्मणः। यतो हि, तव यो देशः सङ्कुचितः प्रतिभाति तत्र उटजं निर्माहीति आज्ञापयति सति राघवे "परवानस्मि काकुत्स्थ त्वयिवर्षशतं स्थिते। स्वयं तु रुचिरे देशे क्रियतामिति मां वद" इति लक्ष्मणः प्रतिवदति।

लक्ष्मणस्य दृष्टौ श्रीरामपरिचर्यासुखस्य पुरतः इतरत् ऐहिकं पारलौकिकं वा ऐश्वर्यजातं निरयकल्पमेव। कुलशेखरभक्तवरः "रम्भाप्रभृतिनारीरत्नपरिवृतस्य सुरलोकस्य ऐश्वर्यमपि नाहं प्रार्थये। किन्तु वेङ्कटाद्रौ भगवतः कैङ्कर्योपयुक्तजलप्रदातृनिर्जररूपतां मे देहि, ततो धन्यजन्माऽहं स्यामिति भगवन्तं प्रार्थयति।

लक्ष्मणः वनगमनाय सन्नद्धस्य ससीतस्य रामस्य पादयोः प्रणिपत्य "मामपि तवानुगमनाय अनुमन्यस्वे"ति याचते। तदा रामः तस्मै राज्यसुखं पित्रोः तेन कर्तव्यं, वनवासक्लेशं च बोधयन् तं निवर्तयितुं इच्छति। किन्तु "न देवलोकाक्रमणं नामरत्वमहं वृणे। ऐश्वर्यं वापि लोकानां कामये न त्वया विना" इति भगवत्कैङ्कर्यविरोधिषु ऐश्वर्येषु स्वस्य अरुचिं, प्रकटयति सः। "कुरुष्व मामनुचरं" — "अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते" इति वनगमने तत्सपर्याविधाने च पुरुषार्थलाभं लक्ष्मणो मन्यते। परस्परं अत्यन्तसारूप्यात् ज्येष्ठकनिष्ठभावं निश्चेतुमप्रभोः हनूमतः पुरतः लक्ष्मणः पम्पासरोवरतीरे "अहमस्म्यवरो भ्राता गुणै दास्यमुपागतः" इति स्वस्य कनिष्ठभावं रामस्यज्येष्ठतां च प्रकटयति। "लोके जनाः मां श्रीरामस्य अनुजं भ्रातरं मन्यन्ते। अहं पुनः तद्गुणेषु मुग्धः तच्छेषभूतः तत्परि-

चर्याकरणयोग्यं दासत्वमेव मन्यमानः सन्तोष्टुं इच्छामि ।" इति व्यञ्जयति । भ्रातृत्वेन स्वरूपतः शेषत्वेऽपि गुणकृतदास्यमेव किल रसावहमिति भावः ।

अयोध्यायां वनगमनकृतसंनाहं आप्रष्टुमागतं लक्ष्मणं तन्माता सुमित्रा "सृष्टस्त्वं वनवासाय स्वनुरक्तः सुहृज्जने । रामे प्रमादं माकार्षीः पुत्र भ्रातरि गच्छति ।" इत्युपदिशति । श्रीरामस्यगमनसौन्दर्यं दृष्ट्वा मुग्धः तत्परिचर्यायां अनवहितो माभूः यतः तव सृष्टिः जन्म च वनवासे स्वपरिचर्याकरणार्थमेव भगवता अकारीति मा विस्मार्षीः इति तस्याः हृदयगतो भावः ।

एवं लक्ष्मणः भगवत्कैङ्कर्यं शरणवरणेन तं निर्बद्धच तदनुमतमपि राज्यवासं विहाय, समुपलेभे । भरतस्तु स्वाभिलषितादपि प्रभोः भ्रातुः आज्ञाऽनुवर्तनमेव स्वकर्तव्यतया प्रकटीचकार । यद्यपि चित्रकूटे "एभिश्च सचिवैः सार्धं शिरसा याचतस्तव । भ्रातुः शिष्यस्य दासस्य प्रसादं कर्तुमर्हसि" इति भरतः राज्यं स्वीकर्तुं अयाचत रामचन्द्रं, तदापि तस्य सान्त्ववचनैः हृद्गतं भावं विज्ञाय तत्प्रतिनिधिभूतां पादुकायुगळीं परिगृह्य प्रमुदितः प्रतिनिवृत्तः नन्दिग्रामेऽकरोद्राज्यम् । रामस्य पुरतः "राज्यं च तव रक्षेयं यथावेलेव सागरं, प्रतिजानामि ते वीर" इति सः प्रतिजानीते च । समुद्राधीना वेला यथा समुद्रं रक्षति एवं त्वदधीनोऽप्यहं त्वदाज्ञया राज्यं संरक्ष्य पितुर्वचनपालनेन निष्पन्नसङ्कल्पं यथा त्वां रक्षामि । स एव मे धर्मः । इति भरतस्य भावना । मातुलकुलादागतं भरतं सभामध्ये राज्याभिषेकाय यदा पुरोहितो वसिष्ठो निर्बध्नाति, तदा सः "विललाप सभामध्ये जगृहे च पुरोहितम् ।" ज्येष्ठे जीवति कनिष्ठस्य राज्येऽभिषेचनं न रघुकुलधर्मः" इति च बोधयति सः ।

यदा चित्रकूटे वसन्तं रामं स्वपुरमानेतुं आयान्तं सपरिजनं भरतं दृष्ट्वा लक्ष्मणः तत्प्रवृत्तिं प्रति अन्यथा शङ्कते तदा रामः भरतस्वभावं बहुधाऽभिवर्ण्य "प्रसाद्य पितरं श्रीमान् राज्यं मे दातुमागतः," "अस्मासु मनसाऽप्येष नाहितं किञ्चिदाचरेत्" इति वदति। लक्ष्मणः तद्वाक्यैः शान्तशङ्कः स्वकृत्ये लज्जते।

लक्ष्मणभरताभ्यां अपेक्षया शत्रुघ्नस्तु अस्माभिः अधिकं श्लाघनीयचरितः। यतो भगवत्कैङ्कर्यापेक्षया भागवतसेवायाः अत्युत्कर्षं स्वयमाचर्य प्रादर्शयत्। यथा सीमनि वृतिभिः अपरिरक्षिते सति केदारमध्ये सस्यानि तिर्यग्भिः भक्षितानि नश्येयुः, एवं भागवतकैङ्कर्ये काष्ठाभूते परित्यक्ते सति क्रियमाणा भगवत्सेवा तन्मुखोल्लासकारिणी नैव भवेत्। किञ्च अधिकः आनन्दश्च तत्सेवापेक्षया तद्भक्तसेवायामेव अनुभूयते।

श्रीवैष्णवसम्प्रदाये मधुरकविसूरिः महानुभावः द्वापरयुगे कृष्णसमकाले उत्तरदेशस्थितोऽपि दक्षिणदेशे ताम्रपर्णीतीरे कुरुकापुरे कृतावतारं शठकोपमुनिमेव कृष्ण तृष्णातत्त्वं अशिश्रियत् इति प्रसिद्धिः। सः स्वकीयगाथाप्रबन्धे "सौलभ्यसौशील्यगुणाकरं कृष्णमपेक्ष्य मे जिह्वायाः शठजिन्मुनिनामैव स्वदते" इति मुक्तकण्ठं उद्घोषयति।

वाल्मीकिमुनिः "गच्छता मातुलकुलं भरतेन तदाऽनघः। शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्सरं" इति भरतस्य अचेतनस्वतुल्यं पारतन्त्र्यं शत्रुघ्नेऽस्तीति वदति। मातुलो युधाजिद्भरतमेव स्वगृहाय आह्वयत्। तथापि तत्परिचरणनिरतः शत्रुघ्नः प्रीतिपुरस्सरं तेन नीतः। प्रातिवेशिकभवनं गताः बालकाः स्वेन सहक्रीडनकानि यथा नयंति। किं शत्रुघ्नः

पित्रोः, रामलक्ष्मणयोः च सेवासुखमनुभवन् गृहस्थधर्मं आचरन् भरतप्रत्यागमनपर्यन्तं अयोध्यायां न स्थातुमर्हति वा? नैव। सः बहिःप्राणभूतं भरतमुत्सृज्य कथं अयोध्यायां वर्तेत? यथा लक्ष्मणः रामेण हीनः अयोध्यां नाभिलषति, एवं भरतहीनः सः अयोध्यां न वाञ्छति। सः भरतेन पेटिकाशयनादिवत् नीतः। अत्यन्तं भरतपारतन्त्र्यं "नीतः" इति पदेन व्यञ्जितम्। लक्ष्मणवत् भगवतः सौन्दर्यादिगुणेषु मुग्धः भागवतसेवां नैव परित्यजतीति "नित्यशत्रुघ्नः" इति पदं व्यञ्जयति। यः खलु उद्दिष्टप्रयोजनस्य अन्तराय मारचयति सः शत्रुरेव। अत्र भगवद्गुणासक्त्याः भरतशुश्रूषणे अन्तरायकारिण्याः शत्रुत्वेन वर्णनं पूर्वाचार्यैः कृतम्। एवं चतसृभिः मूर्तिभिः भगवान् चतुर्विधां स्तत्त्वार्थान् अस्मदादिभ्यः प्राबोधयत्।

---

**धनप्रशंसा —**

अहो कनकमाहात्म्यं वक्तुं केनापि शक्यते।
नामसाम्यादहो चित्रं धत्तूरोपि मदप्रदः॥
न वित्तं दर्शयेत्प्राज्ञः कस्यचित्स्वल्पमप्यहो।
मुनेरपि यतस्तस्य दर्शनाच्चलते मनः॥
ब्रह्मघ्नोऽपि नरः पूज्यो यस्यास्ति विपुलं धनम्।
शशिना तुल्यवंशोऽपि निर्धनः परिभूयते॥
कुत आगत्य घटते विघटच क्व नु याति च।
न लक्ष्यते गतिश्चित्रा घनस्य च धनस्य च॥

# श्रीशारदाष्टकम्

— बालगणपतिभट्टः, श्रीरङ्गपत्तनम् ।

तुङ्गातुङ्गतरङ्गसीकरकणैः सिक्तेऽतिपूते शुभे,
देशे श्रृंगमुनीश्वरस्य नगरे विद्वेषिदूरे च याम् ।
संस्थाप्याथ च शङ्करो यतिवरः चक्रे च चक्रेऽर्चनाम्,
तां श्रृङ्गाद्रिपुरीश्वरीं भगवतीं ध्यायेत्सदा शारदाम् ॥ १

याम्माम्नायसुपीठमध्यलसितः श्रीमत्सुरेशो यतिः,
श्रीमच्छङ्करहस्तपद्मजनितः यां वा सिषेवे पुरा ।
पश्चात्पंक्तिगतो यतीन्द्रनिवहः श्रुत्यंतविज्ञोपि याम्,
तां श्रृङ्गाद्रिपुरीश्वरीं भगवतीं ध्यायेत्सदा शारदाम् ॥ २

पूर्वादिष्वथ दिक्षु देशिकवरश्रीशंकरेणादरात्,
रक्षार्थं किल कालभैरवमुखाः संस्थापिता देवताः ।
रम्यां यां नगरी मवन्ति परितो कोलाद्रिजाया स्तटे,
तां श्रृङ्गाद्रिपुरीश्वरीं भगवतीं ध्यायेत्सदा शारदाम् ॥ ३

अक्षस्त्रक्शुकपुस्तकामृतघटान् हस्तैः शुभैः विभ्रतीम्,
राकाबिम्बसमानरम्यवदनां राजीवनेत्रां रमाम् ।
भक्ताभीष्टवरप्रदां भवभयप्रध्वंसिनीं भारतीम्,
तां श्रृङ्गाद्रिपुरीश्वरीं भगवतीं ध्यायेत्सदा शारदाम् ॥ ४

उद्यद्भानुसहस्रकोटिसदृशां जाड्यान्धकारापहाम्,
दिव्यैराभरणैश्च रत्नखचितैः शोभां वहन्तीं पराम् ।
वागीशाद्यमरार्चितां परगुणां वागीश्वरीं मातरम्,
तां शृङ्गाद्रिपुरीश्वरीं भगवतीं ध्यायेत्सदा शारदाम् ।। ५

स्रष्टुं पूर्वमहो चराचरजगत् ब्राह्मीस्वरूपं दधौ,
लोकाना मवने च कर्मणि सदा या वैष्णवीति स्वयम् ।
आख्या या किल शाम्भवीति च लये धत्ते परा देवता,
तां शृङ्गाद्रिपुरीश्वरीं भगवतीं ध्याये त्सदा शारदाम् ।।६

चामुण्डेति गदन्ति केचन जनाः दुर्गेति केचिज्जनाः,
केचिद्यां कथयन्ति वाथ कमला काली करालीति वा ।
एका यापि च देशकालवशतः भिन्नस्वरूपं धृता,
तां शृङ्गाद्रिपुरीश्वरीं भगवतीं ध्याये त्सदा शारदाम् ।।७

भक्त्या पादसरोजसेवनरता नारा त्समासादितान्,
सर्वान् भक्तगणान् मुदा प्रतिदिनं संसारवारां निधेः ।
उद्धर्तुं निरता कृपाकवलिता पद्मासने या स्थिता,
तां शृङ्गाद्रिपुरीश्वरीं भगवतीं ध्याये त्सदा शारदाम् ।।८

# बालबोधः – ३

— के. सि. जयचन्द्रशास्त्री

बालाः ! आंग्ल्यां "Early to bed and early to rise" इति आर्योक्तिः सर्वे साधारणतया वदन्ति खलु ! भवद्भिरपि बहुधा गृहेषु श्रुतचरैव भवेत् । परन्तु तामुक्ति कृति वा अनुसरन्तीति विचारणीया आस्ते । रात्रौ केचन बालाः व्यर्थालापान् कुर्वन्तः कालं यापयन्ति । बहवो बालाः नियततया नूतनतयाऽऽगतं चलनचित्रं अवश्यं विलोकयन्ति । विशिष्य बालैः सर्वात्मना चलनचित्रावलोकनं परिहर्तव्यम् । प्रथमं तावत् तदवलोकनेन निद्राहानिः जायते । ततः आरोग्यहानिरपि अवश्यंभाविनी भवति । प्रायशः चलनचित्राणि मन्मथोद्दीपकान्येव वर्तन्ते । अस्मात् कारणात् तादृशानां दर्शनेन बालानां मनोवैकल्यं सम्भूय प्रवर्तनां कलङ्कितां करिष्यति । कानिचन चलनचित्राणि भक्तिरसप्रधानानि विद्यन्ते किल तादृशानां दर्शने भक्ति बालानां मनस्सु अंकुरयति किलेति केषांचन वादः वर्ततां नाम । यथा भक्तिप्रधानचलनचित्रदर्शनेन भक्तिः जायते, तथा शृङ्गाररसप्रधानचलनचित्राणां दर्शनेन शृङ्गाररसानुभवरुचिरपि जायत इति सर्वैरवश्य मभ्युपगन्तव्यमेव । साधारणतया जनानां चित्तवृत्तिः शृङ्गारमभिधावति, भक्त्यादिकं प्रति मन्दं मन्दं च गच्छति । नीतिप्रधानेष्वपि चलनचित्रेषु यस्मिन् कस्मिंश्चित् सन्निवेशे नायकयोः संश्लेषणं, संश्लिष्य नर्तनं अवश्यं परिदृश्यते । चलनचित्रनिर्मातृणामभिप्रायः नीतिप्रबोध एव भवतु नाम । व्यापारसरण्या धनार्जनाय अर्धनग्ननृत्यादिकं, नायकयोः संश्लेषणपरि-

चुम्बनपरस्परोद्वहनादिकं च सामाजिकाभिरुचितः प्रदर्शकैः परिकल्पनीयमेवाऽऽस्ते। कानिचन चित्राणि बालकैः न दर्शनीया-यानीति तैरेव प्रकटीक्रियन्ते। एतादृशप्रकटनया, तान्यवश्यं दर्शनीयानीति बालानां मनस्सु उत्सुकता द्विगुणिता भवेत्। एता दृशैः कारणैः चलनचित्रं न दर्शनीयं बालै रिति फलितम्। कौचन पितरौ नियतचलनचित्रप्रेक्षकौ स्याताम्। तादृशौ स्वसन्ततिं सार्धं न नयताम्।

अपि च बालकाः! प्रातः सायं च शुचीभूय सन्निहिते विद्यमानं देवालयं गत्वा दैवदर्शनं कर्तव्यम्। अनया क्रियया महान् लाभः भवति। दैवभक्तिः क्रमशः प्रवृद्धा भवेत्। दैवदर्शनेन मनसः प्रसन्नता जायते। शरीरारोग्यमपि वृद्धि मेति। विद्याऽऽप्तिः सुकरा भवेत्। दैवदर्शनं मानवानां सकलविधकष्टानि निरस्य, सुखसन्तोषादिकमापादयति। मनसः एकाग्रता च सिध्यति। यत्रकुत्राऽपि समीपे नवग्रहाणां मण्डपः स्याच्चेत्, तत्र प्रतिसायं गत्वा यथाशक्ति प्रदक्षिणादिकं कर्तव्यम्। अनेन श्रेयस्सम्प-दभिवृद्धि र्भवेत्। दैवतानामानन्त्येपि, तेष्वेकत्व मेव भावनीयम्। शिवकेशवयोरैक्यमस्माकं ग्रन्थेषु सुष्ठु प्रतिपादित मस्ति। "यथान्तरं न पश्यामि तथा मे स्वस्तिरायुषी"ति प्राचां वचनम्। किन्तु स्वमतानुसारं परम्परागताचारानुगुणतः दैवपूजादिक मवश्यं कर्तव्यम्। येन मानवः इहपरसुखं भजत इति परं बालै र्भवद्भिः न विस्मरणीयम्।

# पुराणमित्येव न साधु सर्वम्

— कांडूरि सीतारामाचार्यः, शिरोमणिः,
मचिलीपत्तनम् ।

यत् यत् पुराणं = प्राचीनं तत् तत् सर्वं, साधु = समीचीन मिति न नियमः । न केवलं प्राचीनता पदार्थे साधुतां साधयितुं शक्नोति ।

इदमाभाणकं कविकुलगुरुणा महाकविना कालिदासेन समुपनिबद्धम् । यथा —

पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः ।।

एतच्छ्लोकस्थाः चत्वारः पादाः चत्वार्याभाणकानि । तेष्वन्यतम-मिदं प्रकृतम् ।

लोके खलु वस्तुनः कस्यचन साधुताविनिश्चये अविचार-चारुः कश्चन प्रायोवादः समुपस्थाप्यते कैश्चिदेवम् । तदतीव प्राचीनम् । अतः अत्यन्तं साध्विति । जायेत नाम कदाचित् कुत्रचित् पुराणतासाधुतयोः साहचर्यनियमः । अथापि नास्माभिरयं पन्थाः साधुताविनिश्चये सर्वत्रादरणीयः । सन्तु नाम अपवाद-भूताः केचित् एतत्प्रायोवादस्य लक्ष्यभूताः एवमिति न तस्य साधारणीकरणं शोभतेतराम् । सन्त्येव प्राचीनानां कृतिषु अतितरां शोभावहानि निस्साराणि नीरसानि च वस्तूनि । तथैव अर्वाचीनानां अप्रसिद्धानामपि कृतिषु सरसानि निरतिशयानि च वस्तूनि । अतः किमत्र विनिगमकमित्यस्माभिः सधीरमालोक-

नीयम् । अन्यथा भूतार्थनिश्चयः नास्माकं निकटतरः सम्पद्यते । जायेत च भ्रान्त्याः पदमास्माकीनः विनिर्णयः । अतः सुष्ठुकार्य-कारणभावपरामर्शे क्रियमाणे इदमस्माकमक्षिगोचर मसन्देह मवतरति यत् गुणोत्कर्षावहमेव साधु । तत् पुराण मपुराणं वा । न तदस्माकं किञ्चित्करम् ।

सत्यपि पुराणे क्वचित् असाधुता । अर्वाचीने च सत्यपि क्वचित् साधुता च दरीदृश्यते । अतः परिणमति काले सर्वस्मिन्नपि प्रापञ्चिके विषये विपरिणामः सम्भवति । अतः तत्र गुणाः वर्तते वा नवेत्येवास्माभिः विचारणा कार्या । गुणानुरोधमेव तत्र गुणगौरवमुपलक्ष्यैव तद्योग्यताऽस्माभिः निर्णेया ।

इदमर्वाचीनमिति लोकेऽस्मिन् बहुभिः निराद्रियते नूतनं वस्तु नायं सम्यक्तरः पन्थाः । को दोषः ? अस्तु नामायमर्वा-चीनः । यदि सन्ति गुणाः तत्र तदवश्यं पुरस्कारभाजकं भवत्येव । अगुणे वस्तुनि कुत्रचित् बलात् कृतेऽपि पुरस्कारे न तत् सेत्स्यति चिरकालम् ।

तत्तद्देशकालपात्रानुगुणं परिणमति वस्तुनि गुणागुणपरीक्षा-पुरस्सरं विद्वांसः 'इदं साधु' इति वा 'इदमसाधु' इति वा निर्णयन्ति । मूढास्तावत् परेषु विश्वासं कुर्वाणाः तदभिमतमेव स्वाभिमतं मन्यमानाः भवन्ति लक्ष्याणि अन्धगजनयस्य ।

अत एव पारदर्शी कविर्वर्णयति "मूढः परप्रत्ययनेयबुद्धिः" सन्तः परीक्ष्यान्यतरत् भजन्ते" इति ।

अयं संघर्षः प्राचीन - नवीनयोः बहोः कालादारभ्य वरीवर्ति । ाचीनमपि तदुत्तरकालापेक्षया नवीनमेव बोभवीति । लोके

खलु कदाचित् स्नुषारूपेण वर्तमाना वध्वः भिन्नकालावच्छेदेन तस्मिन्नेव कुटुम्बे श्वश्रूः भवितुमर्हति अतः काल एवात्र भेदकः। न तावता साधुताऽसाधुता वा नूतनतया वस्तुनि प्रविशति, अपगच्छति वा। तन्निर्णायकास्तु गुणाः। अत इदमापात-रमणीयं पुराणतया इदं सर्वं साधु इति वा, नवीनतया इदं सर्वं साधु इति वा। नायं विद्वज्जनसमुपादेयः पक्षः। तेषां तु विवेकप्रधाना योग्यायोग्यपरीक्षा अन्ततः अनुसरणीयः पन्थाः। तेनैव ते वस्तुगतां साधुतां असाधुतां वा निश्चिन्वन्तीति आभाणक-कर्तुराशयः।

अतः परप्रत्ययनेयत्व मपहाय सर्वैरपि योग्यायोग्यविचार-णया लोके पदार्थाः काव्यार्थाः उन्नेयाः निश्चेयाः आदरणीयाः इति निर्गलितोऽर्थः। तदा खलु लोकव्यवसायः समीचीने पथि प्रचलितुं प्रभवतीति शम्।

**न जहाति सुखं कश्चित् —**

केचन आमयाभिभूताः भिक्षुका चिकित्सार्थं वैद्यशालाः प्रविश्य, तत्रत्येन शयनाहारपानसुखादिना परिहृष्टा स्सन्तः, रोगे निवृत्तेऽपि तत्परित्यक्तु मनुत्सुका एव भवन्तीति काचन वार्ता श्रूयते। तत्वे विचार्यमाणे तत्तु न्याय्यमेव प्रतिभाति। विना श्रमं लब्धं सुखं को वा हातुमुत्सुको भवेत्। वैद्यशालाधि-कारिणः भिषजः एतान् नीरोगान् भिक्षुकान् महता प्रयत्नेन बहिर्निर्गमयन्तीत्यपि, तेषामधिकारिणा मनेन महती जटिला समस्या जातेति च विज्ञायते।

**महिळानां संस्कृताभ्यासावकाशः —**

अन्तर्जातीयमहिळासंवत्सरसन्दर्भं पुरस्कृत्य श्रीकाकुळमण्डलान्तर्गतबोब्बिलिनगरविज्ञानवर्धिनी परिषत् स्त्रीणां संस्कृताभ्यासाय अपूर्व ममूल्यं चावकाशं परिकल्पयति। स तु विना व्ययं पत्रालयद्वारा उत्सुकानां स्त्रीणां संस्कृते शिक्षणां ददातीयं परिषद्। अस्मिन् उत्सुकाः स्त्रियः निम्नलिखितसंकेतेन पत्रव्यवहारः कर्तव्यः।

अपि च चित्तूरु सं. भा. प्र. सभायाः परीक्षाशिक्षणार्थिनीभ्यः स्त्रीभ्यः, बोब्बिलिनगरे स्त्रीभिः शिक्षणा विना शुल्कं बोध्यते। अयं बोब्बिलिनिवासिनीनां स्त्रीणां संस्कृताभ्यासाय महानवकाशः।

यस्. आर्. लक्ष्मीः,
c/o कार्यदर्शी,
वि. वि. परिषद्. - अग्रहारं,
बोब्बिलि 532558.

★

**श्रीरामदूतस्याऽपि चोरभीतिः —**

अलहाबादनगरे कतिपयेभ्यः दिनेभ्यः पूर्वं स्वर्णमयी हनुमतोमूर्ति रारक्षकभटैः आयत्तीकृतः। मूर्तेरस्याः अपहर्तार मतीव अप्रमत्ततया आरक्षकभटा गवेषयन्तीति तत्रत्यः रक्षणशाखाधिकारी प्रत्यवदत्। ४५ सें. मी. आयतमूर्तेरस्याः मूल्यं दशलक्षरूप्यकाणि भवेयु रिति निपुणानां स्वर्णकाराणा महः। अलहाबाद्नगरे दारागंज्प्रान्ते आरक्षका एनां मूर्ति जगृहुः। अपूर्वा मेनां मूर्ति चोराः पञ्चसप्ततिसहस्ररूप्यकेभ्यः विक्रेतुं संसिद्धा आसन् इति ज्ञायते।

अहो! पुण्यभूम्यां देवताप्रतिमानां दुस्थितिः।

# शुचीन्द्रस्थलमाहात्म्यम्

लेखकः — श्री पि. परमेश्वरशर्मा

उपकर्ण्य खगेन्द्रवाहवाक्यं,
 स मुनिः पङ्कजसंभवाङ्गजन्मा ।
पतिदेवतयानसूयया तत्,
 विपिनं ज्ञानसमाह्वयं प्रपेदे ॥ १

स वनेषु निमज्ज्य यज्ञतीर्थे,
 सवनानि त्रिदशार्चनं च कुर्वन् ।
सवनान्तर मास्थितस्मृतोऽभूत्,
 सवनाद्याब्जदृशोरितेन पित्रा ॥ २

मुनि रब्जभुवे निजानि कर्मा —
 ण्यखिलान्यर्पितवा नथोटजान्ते ।
स्मित मातनुते स्म तस्य हेतुं,
 परिपृष्टो निजगाद तां प्रसन्नः ॥ ३

अथ सा पतिपादतीर्थ मन्नं,
 पतिभुक्ता दवशिष्ट मादरेण ।
विधिवत् परिगृह्य भर्तृपादे,
 नमति स्मेय मुपोढभक्तिभारा ॥ ४

क्रियते भवतो ह्यसन्निधाने,
 य दनेनार्यजनेन कर्म तन्मे ।

सकलं भवतापि सोढुमर्हं,
मयि चानुग्रह मादरात् करोतु ॥ ५

अपराध मशेषतः क्षमेथा,
मम रक्षा भवतः करे निषण्णा ।
इति भक्तिपुरस्सरं वदन्त्यां,
प्रणयिन्यां मुनि राशिषं व्यतारीत् ॥ ६

निषसाद विरिञ्चलोकयात्रा,
कुतुकी योग मुपाश्रितोत्रि रत्र ।
क्षणमात्र मृषि स्तु सिद्धयोगो,
लघु पैतामह माप्तवा न्निशान्तम् ॥ ७

निजपुत्र मवाप्त मब्जजन्मा,
सदसि प्रेक्ष्य समोदमेदुरात्मा ।
अकरो दथ सत्कृतिं यतात्मा,
मुनि रप्यन्तरवाप सान्द्रमोदम् ॥ ८

अथ जीवथ चक्रचंक्रमाय,
प्रथितेनाब्दगणेन साध्यसत्रे ।
वृतवा न्मुनि माध्वरं विधातुं
विधिना कर्मविधि र्विधिज्ञ मेनम् ॥ ९

मुनि रप्युररीचकार दर्भान्,
स तथास्त्वित्यनुमन्त्रणेन साकम् ।
परिपाहि तदाश्रमस्थितास्मा,
ननिशं शङ्कर सङ्कटान्तरस्थान् ॥ १०

# श्रीनिवासविलासभाणः

महाकवि पैत्तंबाडि रामानुजाचार्यः

[ पूर्वानुबन्धः ]

किञ्च —

कृष्णो गोपी कृष्णो गोपी त्येवंरूपां रासक्रीडाम् ।
चक्रे गोपः कामी योऽसौ कालाभ्राभः फिञ्छाकल्पः ॥ ४४

अन्यच्च—

यः कालिन्दीह्रदं प्राग्गरलकलुषितं कालियस्यापहृत्वाऽ,
खर्वं गर्वं फणायां विरचितनटनो वालधिं संप्रगृह्य ।
नित्यं शुद्धं चकाराखिलमनुजमुदे वेणुगानातितृप्तो,
राजीवाक्षो लीलामनुजविट इहाप्यागतो वृष्णिवीरः ॥

(इति) अलमलं स्तुतिवचनजालैः वीटिकां देहि (इति नाटचेन संगृह्य) निश्शेषं भूषय क्षणेन आगच्छामि (इति परिक्रम्य अन्यतो वीक्ष्य) कोऽय मस्मिन् वेशवाटेरपि वेदसूत्रादीनि परिपठति । (निरूप्य)अयं खलु दिने दिने रात्रिप्रथमयामपर्यन्तानुष्ठितश्रौतस्मार्तधर्मः ब्राह्ममुहूर्तपर्यन्तानुष्ठितवाराङ्गनायोगः अन्योपकल्पितस्वकलत्रभोगः गाढानुरक्तया मन्दाकिनीतनयया मनोरञ्जन्या एतद्दिने एतावत्पर्यन्तं गाढालिङ्गितः तत्कुचकुम्भमकरिकापत्रांकितोदरवक्षोबाहुपृष्ठः तत्कस्तूरीतिलकचिह्नितवदनोर्ध्वतिलकः तदध्यापितकामवेदवात्स्यायनसूत्रादीनि तत्परिरम्भश्रमगद्गदस्वरः संशीलयन् अपरबादरायणमाधवाचार्यसूनोः प्रख्यातकुलविरुदा-

ङ्कितस्य शतावधानमहामहोपाध्ययोपपदस्य नरकेसरिशिरोमणेस्तनयः श्रीनिवासमन्मथोत्सवादिसंमिलितमहाजनदत्तपण्डितशेखरबिरुदाङ्कितः देवराजपण्डितो नाम वैदिकविटः स्वगृहं गन्तुं लज्जित इव आस्ते (उपसृत्य सहर्षश्लाघहासं) भो देवराजपण्डित, किमिदानीं धारणार्थं असकृदुद्घुष्टं भवता किं ब्रुवतु श्रुणोतु भावः 'अथातो धर्मजिज्ञासा' इति धर्मसूत्राणि इति तथ्यं पङ्क्तिमेव वदतु भवान् किं ब्रुवतु भावरहस्यमिदं न प्रकाशयतु भवान् मनोरंजन्या तावत् "आचिनोति हि शास्त्रार्थां नाचारे स्थापयत्यपि। स्वयमाचरते यस्मात् तस्मा दाचार्य उच्यते।" इत्युक्तलक्षणया स्वानुष्ठानपूर्वकं मयि उपदिष्टानीमानि कामागमसूत्राणि श्रुणोतु "अथ चित्ररतानि अधोरतं पायावपि दाक्षिणात्यानाम्" इतीति (सश्लाघं) साधु पण्डित, साधु, सुष्ठु तावत् अयं घट्टः अभ्यस्यते तत् अहोरात्रं त्यक्तेतरकार्यः तया सह एतत्सूत्रगणोदितसत्कर्माण्यनुतिष्टतु अयमेव परमो धर्मः। अहं पुनः पद्मावतीं परिगृह्य आगच्छामि (इति परिक्रम्य पुरो वीक्ष्य) अये कस्यचित् रूपकस्य आरंभसमय इदानीमिव यत् एतन्नाटचशालायां वेश्याजनपीठमर्दविटादिसमवेतायां पूर्वरंगविधायकसूत्रधारः आगच्छति तत् एतत्सभाध्यक्षतां गतः एतत्प्रविशत्पात्रैस्सह संलपन् रूपकदर्शनसुखं अनुभवामि (इति तथाकृत्वा सहर्षं) प्रस्तूयतां तावद्रूपकं अन्तर्भाणः।

यः शत्रुं कंसमुग्रं व्रज यदुकुलजान् नाशयन्तं क्षितीशान्,
अन्याश्चैद्यादिका नप्यधिकबलयुतान् दानवांशान् विजित्वा।
राधाया जांबवत्या अपि करकमले रुक्मिणीसत्यभामा
पाणीजग्राह वन्दे नवजलदनिभं पाण्डवप्राणमित्रम्॥ ४५

(नान्द्यन्ते सूत्रधारः) अलमतिविस्तरेण अद्य। खलु वेश-वाटिकारंगशालासमवेता वेङ्कटशेश्वरापरनामक भुजङ्गशेखरा-दीनां परिष दियं तत् केन अभिनवेन रूपकेण अभिनेतव्यं। किमाज्ञप्तं श्रीरामानुजकविग्रथितवस्तुना कमलवल्लीपरिग्रहाख्येन भाणरूपकेण यस्मिन् खलु भाणे श्रीकृष्णापरनामा शिखण्डशेखरो नायकः इति। तदारभ्यतां आर्यया संगीतरंजन्या गीतिः कथं गायसि प्राकृत माश्रित्य।

विअअदिखु माहूवसिरी जअइ अणंगस्स बाणतेओवि।
जअइ मदणो वहूसुअ जअइश मबआणिलो विहू पुण्णो॥ ४६
मंदाअ गदी मज्झं किसंवि जहणं घणं थ्थणं पींणम्।
विअअदिखु कामिणीणं दीहं णअणंअ सौभग्गम्॥ ४७

छाया —

विजयति खलु माधवश्रीः जयत्यनंगस्य बाणतेजोऽपि।
जयति मदनो वधूषु च जयति च मलयानिलो विधुः पूर्णः॥
मन्दा च गति र्मध्यं कृश मपि जघनं घनं स्तनं पीनम्।
विजयति खलु कामिनीनां दीर्घं नयनं च सौभाग्यम्॥ ४८

इति। भुजङ्गशेखरः किं ब्रवीतु। साधु सङ्गीतरञ्जनि त्वन्नाम साधु यत्परिषत्कर्णयोः अमृतं वर्षसि इति तथाऽपि बहुषु भाण-ग्रन्थेषु अप्राकृतेषु सत्सु कथमस्मिन् प्राकृतानुप्रवेशः भुजंगशेखरः किमाज्ञापयतु बाणकविना प्रयुक्तत्वात् सभारंजनार्थं तथैव गेयत्वात् प्राकृतमिव द्राविडरूपगानमपि तद्भाषयैव गेयम् इति अपभाषारूपत्वात् केनापि कस्मिन्नपि रूपके अप्रयुक्तत्वाच्च तस्य

कथमनुप्रवेश स्संगच्छते। किमाज्ञापयतु परांकुशपरकालादि-महर्षिपरिगृहीतत्वात् कुत्राप्यदृष्टत्वेऽपि अस्माकं श्रेयस्साधनत्वात् तद्गीतिगानस्य।

"मयैव सांस्कृतीभाषा प्रयुक्ता स्वर्गदायिनी।
प्राकृती द्राविडी चापि तथैव स्वर्गदायिनी॥

अगस्त्यप्रार्थनातुष्टब्रह्मदत्तवरा इमाः।
नापभ्रंशत्वदोषोस्ति द्राविडीनां गिरां ततः॥

श्रुतोतु न म्लेच्छितवा इत्यतदपि यद्वचः।
प्राकृता द्द्राविडाच्चापि चिभिन्नविषयं भवेत्॥

अतोऽन्याः खलु या भाषा आन्ध्रकर्णाटदेशजाः।
तदनार्षा दपभ्रंशा इति शास्त्रविदांमतम्॥"

इति पुराणेषु उद्घुष्टत्वाच्चेति (सहर्षांजलिबन्धं) अनुगृहीतोऽहं आर्ये संगीतरंजनि।

रागेण तव सुगीत्याहृतोऽस्मि भद्रे शिखण्डशेखरवान्।
रतिरंजन्याडोलागीतेन यथैषरम्येण॥ ४८

इति निष्क्रान्तः। (इति प्रस्तावना।)

ततः प्रविशति शिखण्डशेखरः। पुरोवीक्ष्य (स्वगतं) मयैव खलु भुजंगशेखररूपेण चत्वारो नायिका स्संभाविताः। अद्य ससभाध्यक्षभूतः असावत्रैव तिष्ठति तद्विनोदयामि (प्रकाशं) इयं खलु राधापरनामधेया रतिरंजनी डोलायां गायति येषा।

[क्रमशः]

# श्रीरामानुजाचार्यः

"अवरः"

[पूर्वानुबन्धः]

तथाऽपि रामानुजः तेषां क्षुद्रकृत्यानां वशं वदो नाऽभूत् । कदाचिदेत एव शाक्तेयाः शङ्कर मद्वैतप्रवर्तकं वादे जेतु मसमर्था नाना बाधन्ते स्म इति वदन्ति । तद्वदेव रामानुजस्याऽपि समुपस्थितम् । वादविमुखान् परोक्षरूक्षान् तान् क्षुद्रान् स्वमहिम्नैव विनिर्जित्य, वादे समुपस्थिता स्तु निजशेमुषीविभवेन स्वायत्तीकृत्य तत्रत्यशारदापीठाधिवासिन्या साक्षा च्छारदयैव श्रीभाष्य मङ्गीकुर्वन्त्या प्रदत्त "भाष्याकार" गौरवाभिधानः काशीं प्रस्थितः । तत्र काशीपण्डितैः सह वेदान्ततत्त्वचिन्तायां प्रवृत्तायां सर्वेऽपि अद्वैतिनः रामानुजस्य धिषणानिकषोपले विवर्णतां गताः । काशीतः श्रीकूर्मं गतः श्रीरामानुजः तत्रत्यै श्शैवै स्सह वाद मारेभे । "यदि वादे विजिताः स्याम तर्हि न केवलं वयं वैष्णवा भवेम, अपितु अमुं शैवालय मपि वैष्णवालयं संस्कर्तु मङ्गीकुर्मः" इति प्रतिज्ञापुरस्सरं श्रीकूर्मशैवाः रामानुजेन सह वादारम्भ मकुर्वन् । त्रीणि दिनानि वादोपवादाः प्रवृत्ताः । अन्ते शैवाः रामानुजेन विजिताः विशिष्टाद्वैतमत मङ्गीचक्रुः । एव मालयं वैष्णवालय मकार्षुः ।

श्रीकूर्मा द्रामानुजः सिंहाचलं गतः । प्रकृतिरामणीयकोपेते तस्मिन्नचलश्रेष्ठे कृष्णमाचार्यो नाम महान् संगीतविद्वान् आसीत् । तस्य गानमाधुर्येण सिंहाद्रीशोऽपि सान्निध्यं प्रयच्छतीति किंवदन्ती । अत स्स विद्वान् किञ्चिदिवाऽवलिप्तः । यद्यपि

रामानुजः तस्य गानमाहात्म्येन कण्ठमाधुर्येण च मुग्ध आसीत्, तथाऽपि तस्य गर्वान्धकारं दूरीकर्तुमैच्छत्। तयो रेवं सम्भाषणं प्रवृत्तम् —

कृष्णमाचार्यः – भगवान् गानलोलः, संगीतमाधुर्येण स सुप्रीतः सुप्रसन्नश्च भवति। अतः संगीतमेव उत्तमं साधनं; तत्पुरतः ज्ञानं भक्तिर्वा न किञ्चित्कर्तुं शक्नोति।

रामानुजः – बाढं, संगीत मुत्तमं साधनमिति यदुक्तं तत्सुष्ठूक्तं; न तत्र संशयो लेशतोऽपि। किन्तु यदि विद्या, विनयं न ददाति तर्हि साऽविद्यैव भवति। अविद्यामूलदुरहंकार-दुर्विदग्धः भगवत्सन्निधिं नाऽर्हति। अतः स्वस्वरूपं पर-स्वरूपज्ञानेन भगवद्विश्लेष मसहमानया भक्तिभावनया च यद्गीतं तदेव सङ्गीतमिति वक्तुं शक्यते। एवम्भूतेन सङ्गीतेन भगवद्गुणसङ्कीर्तनं कर्तव्यम्। तदैव सङ्गीतं तारकं उत्तमं साधनं भवितु मर्हति।

कृष्णमाचार्यः स्वकीय मवगुणं अवगत्य रामानुजं शरणं गतः। एवं भक्तितत्त्व मुद्घोषयन् रामानुजः सिंहाचलक्षेत्रे पाञ्चरात्रागमविधानेन पूजाविधानं व्यवस्थाप्य विक्रमसिंहपुर मागतः। तत्रत्येभ्यो जनेभ्यः श्रीवैष्णवमततत्त्वं प्रबोधयन् निज-निवासार्थं निर्मिते आश्रमे कूरेशदाशरथिभ्यां प्रियशिष्याभ्यां सह प्रतिवसति स्म कतिपयदिवसान्। एवं —

"पाषण्डद्रुमषण्डदावदहन श्चार्वाकशैलाशनिः,
बौद्धध्वान्तनिरासवासरपति र्जैनेभकण्ठीरवः।
मायावादिभुजङ्गभङ्गगरुड स्त्रैविद्यचडामणिः,
श्रीरङ्गेशजयध्वजो विजयते रामानुजोऽयं मुनिः॥"

११. तिरुमलै (श्रीशैलम्) —

श्रीरामानुजः विक्रमसिंहपुरे यदा जनेभ्यः वैष्णवमततत्त्वं बोधयन्नासीत्, तदा तिरुपतिनगरे विद्यमानात् श्रीशैलपूर्णात् पत्र मेकं रामानुजं प्रति आगतम्। तत्रैव मुल्लिखित मासीत्।

श्रीमते रामानुजाय अनेकमङ्गलाशासनानि – तिरुमल-तिरुपतिवास्तव्याः श्रीवैष्णवा स्सर्वे समेत्य भवदागमनं वाञ्छन्ति। इदं सर्वेषां श्रीवैष्णवाना मभिमतानुरोधेन प्रहितं भवतः आह्वान-पत्रमिति मन्तव्यम्। श्रीवैष्णवपक्षे शैवै स्सहवादाय भवान् ऐक-कण्ठयेन वृतः। अत्र प्रत्यहं शैवानां वैष्णवानां च वाक्कलहः संघर्षश्च प्रवर्तते प्रवर्धते च। अस्य मतकलहस्य अन्तः करणीय इति उभयमतविद्वद्भिः निश्चित्य तदर्थं वादगोष्ठी काचि दायोजयिष्यते। तस्यां वादगोष्ठ्यां यस्य मतस्य विजयो भविष्यति तन्मतानुसारे-णैव तिरुमलालये (श्रीशैले) दैवनिर्णयो भविष्यति। तदनुसारेण च आलये आराधनाविधान मपि प्रवर्तिष्यते इति वादपणमपि शैवैः प्रस्तुत मस्ति। अत स्सत्वरं भवानत्रागत्य वादे शैवमतं निरस्य श्रीवैष्णवमतं प्रतिपाद्य श्रीशैल (तिरुमल) देवालये वैष्णवागमोक्तविधानेन आराधनाविधिं व्यवस्थापयतु इति सर्वैः श्रीवैष्णवैः भूयो भूयः प्रार्थ्यते। अस्मिन् भगवद्भागवतकार्ये विलम्बो वा उपेक्षा वा माभूदिति विशिष्याऽहमपि भवदागमन माकाङ्क्षमाण स्सानुरोधं भवन्त मस्मिन् कैङ्कर्ये नियमय न्नाशंसे यद्भगवदनुग्रहोऽस्माभि र्निश्शङ्कं प्राप्स्यत इति।

इत्थम्,
भवन्मङ्गलाशंसी,
श्रीशैलपूर्णः।

पत्रमिदं कूरेशः पपाठ। श्रीरामानुजः पत्रार्थं विज्ञाय पत्रसंवाहकं श्रीवैष्णवं तिरुमलतिरुपतिपुरविशेषान् पुनः पप्रच्छ। सोऽप्येव माह —

"भगवान्! नेदं तत्र भवतोऽविदित मिति यत् तिरुमलक्षेत्रं (श्रीशैलं) प्राचीनतमं दिव्यक्षेत्रमिति, तत्र विलसदर्चामूर्तेः बिम्बं वैष्णवमिति। परन्तु अधुना तिरुमलदेवालयः शैवानामधीनोऽस्ति। शैवाः शैवमूर्तिं भावयन्ति देवस्य पूजाविधानमपि शैवागमोक्त-प्रकारेण प्रवर्तते। वैष्णवानां इदं हृदयकण्टकं भवति। तत्र भवद्भिः दिग्विजययात्रायां परमतनिरसनपूर्वकं श्रीवैष्णवमतं स्थाप्यमानं, शैवालयानां वैष्णवालयतया परिवर्तनं श्रुतवद्भिः श्रीवैष्णवैः हर्षनिर्भरै रिदमाशास्यते यत् श्रीवैष्णवक्षेत्रे वैष्णवा-लयः शैवाना माधिपत्ये शैवालयः संवृत्तः स पुन रिदानीं तत्र भवतां प्रभावेण वैष्णवालयो भूत्वा तत्र वैष्णवागमोक्तप्रकारेण आराधनाविधानं प्रवर्तता मिति।

तत्र बहूनि ऐतिह्यानि देवालयस्य वैष्णवत्वप्रतिपादकानि श्रूयन्ते। नारायणवनप्रान्तपरिपालकस्य आकाशराजस्य पुत्रीं पद्मावतीं श्रीवेङ्कटरमणः पर्यणैषी दिति हि गाधा प्रथते। आकाश-राजस्य सोदरः तोण्डमान्नाम चक्रवर्ती तिरुमलक्षेत्रे श्रीवेङ्कट-रमणस्य आलयनिर्माण मकार्षी दिति प्रसिद्धिः।

आकाशराजानन्तरं राज्यार्हं तत्पुत्रेण तोण्डमानस्य युद्धमभू-दिति, तदानीं तेन प्रार्थितः भगवान् श्रीनिवासः तोण्डमान् चक्रवर्तिने स्वीयशङ्खचक्रौ रक्षार्थं प्राहिणोदिति, ततः प्रभृति भगवान् शङ्खचक्रधारी न संदृश्यत इति हि वस्तुस्थितिः।

[ अनुवर्तते ]

सुकविता यद्यस्ति राज्येन किम् ?

## कविताविनोदः —

(१) समस्या ।

"कानने क्रन्दते वधूः"

उत्सुकै रेतां समस्यां सचमत्कारं पूरयित्वा एतन्मासान्तात् पूर्वमेव अधोविद्यमानचीटिकायां स्वसङ्केतादि यथासूचितं सविरळं विलिख्य, साकं प्रेषणीया । प्रेषितेषु रुचिरतया विद्यमानाः श्लोकाः आगामिन्यां गैर्वाण्यां प्रकटीकरिष्यन्ते ।

---

कविताविनोदाय

नाम –

सङ्केतः –

नगरं / ग्रामः –

पत्रालयः –

मण्डलम् –

प्रान्तः –

सम्पादकः

"गैर्वाणी" मासिकी पत्रिका,

सं. भा. प्र. सभा,

चित्तूरु,

चित्तूरु मण्डलम्,

आन्ध्रप्रदेशः ।

इति सङ्केताय प्रेषयन्तु ।

Please mention your membership Number for
easy correspondence.

*R. N. 1845/60.* *Postal C. T. R. 11.*

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
Licensed to Post without Prepayment. LICENCE No. 57.

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ५–००

---

## प्रहेलिका

★

सुवर्णस्य सुवर्णस्य सुवर्णस्य च जानकि ।
प्रेषिता तव रामेण सुवर्णस्य च मुद्रिका ॥

सुवर्णस्य = उज्ज्वलवर्णस्य, सुवर्णस्य = शोभना वर्णा नामाक्षराणि यत्र तस्य, सुवर्णस्य = अशीतिरक्तिकापरिमितस्य, सुवर्णस्य = काञ्चनस्य ।

Published by Sri N. Ramanatha Aiyer B. A; B. L., Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri K. V. Raghavan, (in-charge)
at Vijaya Press, Chittoor (A. P.) C. 1[illegible].